॥ श्रीराम ॥

योधपुरीयायुर्वैदिकसम्मेलनान्तर्गत

# संस्कृत संमेलन—

सभापतेः

कविराजाशुकवि

## पं० नित्यानन्द-शास्त्रिणो,

# भाषणम्

सं० १९९६

B. P. Jodhpur.

॥ श्रीरामः ॥

# योधपुरीया युर्वैदिक सम्मेलनान्तर्गत-संस्कृत संमेलन-समापतेः कविराजाशुकवि पं० नित्यानन्द शास्त्रिणो

## —भाषणम्—

अयि संमाननीयाः सौभाग्यलभ्याः सभ्याः !

श्रीरमापतेः शुभावहं परमानुग्रहं समालम्बमानः, मन्यमानश्च कृतज्ञतां श्रुतपारदृश्वनां वयोवृद्धानां बहुश्रुतानां, गुणैकदृशः सभाया निदेशमनुवर्तमानः प्रस्तवीमि किंचिन्निवेदयितुम् ।

अतीव सौभाग्यं मन्यामहे यत्, प्रजाजनमानसराजहंसस्य राठौड़वंशावतंसस्य राजराजेश्वरस्य श्रीउम्मेदसिंहदेवस्य विविधविद्या-कला-कलापविकासने राज्यशासने समनुभवामो वयं एतादृशं परस्परं संमेलनावसरम् । तदेनां को नाम

मन्दभाग्यो गुणैकपक्षपातिनः स्वामिनः कृतज्ञतां न प्रकाशयेत् ? अद्यास्माकं स्मरणसरणिमारोहति विक्रम-भोज-हर्षवर्धनादीनां हर्षवर्धनः समयः । किन्तु तादृशानां गुणगणमण्डितानां पण्डितानां, निष्प्रतिमप्रतिभोदयानां कविमहोदयानां चाभावं भूयो भूयोऽनुभूय विषादमापद्यते नश्चेतः । अत एवेदानीतनेषु प्रविरला एवो पलभ्यन्ते संस्कृतविद्वांसः ।

किं नाम कारणमत्र विषये इति प्रकारे विचारे समुपस्थिते, नार्थकरीदानीं म्रियमाणा संस्कृतभाषेति क्रमेण कर्णाकर्णि-कयाऽऽकर्णितं सर्वैः तदेव पदे पदे उद्घोष्यते । एवं गतानुगति कतया गड्डलिकाप्रवाहेण प्रचलतां मध्ये न कोऽपि अन्वेष-यति वस्तुतत्त्वम् । यदि गहनगभीरमनुप्रविश्य हृदयदृशा ऽन्वेष्येत, अवश्यमेव लभ्येत तत् । निवार्यतां निष्फलः कलकलः संपाद्यतां स्वान्तं शान्तम् । स्मर्यतां पूर्वजैरनुवृत्तं प्राचीनेति-वृत्तम् समालोच्यतां समनुकार्यं कार्यं तेषाम् । विलयं स्वय-मेष्यति प्रबोधदरिद्रा निद्रा । उद्घटिष्येते तमोमोचने लोचने उदेष्यति तेजः प्रसविता प्रबोधसविता । द्रक्ष्यते सर्वतः शान्ति सुखसंकाशः प्रकाशः । स्वयमेव दर्शनपथमेष्यति समभि-मता दिक् । उपजनिष्यते श्रद्धा । श्रद्धया च सकलमपि समीहितं सेत्स्यति ।

श्रद्धया सेव्यतां सुरसरस्वती। समुपार्ज्यतां पूर्णतया तत्परिज्ञानम्। कथं नार्थकरी स्यात् संस्कृतभाषा। कार्मकाण्डिकानि मन्त्रतन्त्रयजनयाजनादीनि पठन-पाठन-पुस्तक निर्माण-सम्पादनादीनि, धर्मोपदेशकथावाचनादीनि आयुर्वैदिकचिकित्सा--ज्यौतिष--सामुद्रिकादीनि जीविकासाधनानि अर्थकराणि भवन्त्येव। भाग्यं तु अपेक्ष्यते धुरीणैरिंग्लिशविद्वद्भिरपि। किन्तु संस्कृतपाठनसरणी अनुसरणीया सरलया रीत्या। सरलतरगद्यपद्यपुस्तकेषु व्याकरणनियमाः क्रमानुसारं बोधनीयाःस्युः। ततः कक्षोचितानि तादृशान्येव पुस्तकानि बहुशोऽभ्यसनीयानि भवेयुरिति।

ऐहलौकिक-लोकव्यवहारोचिताया राष्ट्रभाषायाः प्रचारोऽपि कल्याणायैव कल्पेत संस्कृतज्ञानाम्। साऽपि खलु प्रारम्भिकं संस्कृतज्ञानमन्तरा अन्तरान्तरा अन्तरायदर्शिन्येव सिध्यति साहित्यरमास्वादनेषु। खण्डे खण्डे पाण्डित्यं तु कस्या अपि भाषाया नाभि मतमर्थं ब्रूते। एतदेव सर्वं मभिप्रेत्य नवीनं खण्डनाट्यं मनोविनोदार्थमुपहियते सभ्यानाम्। इति संस्कृतस्य संरक्षणसरणिं संक्षेपेण समर्थ्य सक्षमाप्रार्थनं समापये स्वकीयं कथनमिति शिवम्।

---

॥ श्रीरामः ॥

# संस्कृत मङ्गलम्।

[ रविदत्तसोमदत्ताभ्यां शिष्याभ्यामनुगम्यमानः प्रथमं प्रविशति विष्णुशर्मोपाध्यायः ]

उपाध्यायः–सौम्यौ ! पूर्वं पञ्चदेवतानां मङ्गलमाचरतम्।

शिष्यौ–यथाज्ञापयति उपाध्यायः [इति तौ साञ्जलि मङ्गलमाचरतः]

१—शुभमृद्धिसिद्धियुक्तं प्राग् मङ्लार्थं उक्तम्।
सकलान्तरायमुक्तं गणनायकं नमामः ॥

२–कविताकलाप्रदात्रीं सुरभारती यधात्रीम्।
विधिसुप्रसादपात्रीं श्रीशारदां नमामः ॥

३—जगदेकनाटयकारं तत्केलिसूत्रधारम्।
सश्रीनटीविहारं हरिमादिमं नमामः ॥

४—कृतकामरङ्गभङ्गं धृतमौलिपूत गङ्गम्।
गौरीगणेशसङ्गं श्रीशंकरं नमामः ॥

५–जगदेकसाक्षिभूतं सुतरामनूरुसूतम्।
यः संपुनात्यपूतं तं सूर्यमानमामः ॥

---

१ एतत् खण्डनाट्यं श्रीदर्बारसंस्कृतपाठशाला-प्रधानाध्यापक-श्रीविष्णुशर्मा-चार्यप्रबन्धेन तदीयच्छात्रैः संमेलनसंमुखेऽभिनीतम्।

उपाध्यायः-वत्सौ ! अद्य अस्मत्सुहृदा नित्यानन्देन निर्मितं संस्कृतमङ्गलं नाम खण्डनाटकं नाटयितव्यम् । अपि नाम सज्जौ युवाम् ?

[ नेपथ्ये—

संस्कृता वागर्हिताऽसौ नागरीति-समाहिता ।
लोके काममृता सिद्धिं न दत्ते खलु वाञ्छिताम् ॥

इति पुनः पुनः पठति ]

उपाध्यायः-[ श्रुत्वा ] अरे ! किमिदं कर्णकटु श्रूयते ? कामं प्रकामं मृता असौ संस्कृता वाक् लोके वाञ्छितां सिद्धिं न दत्ते, इति भावात्मकेन अनेक पद्येन को मां कोपयति संतापयति च ! सौम्य ! सोमदत्त ! एतच्छब्दमनुसृत्य एतद्वाचकमन्वेषय । कोऽयम् ?

सोम—एतच्छब्दानुसारं एतद्वाचकं इदम्- शब्दं पुस्तके किं अन्वेषयामि । कण्ठस्थोऽयम् । एष ब्रवीमि [ अयं इमौ इमे इत्यादि पठति ]

उपा—मूर्ख ! पद्येन यच्छब्दश्रवणं जायते तच्छब्दमनुसृत्य स श्लोकवक्ताऽन्वेषणीयः ।

सोम—श्लोकवक्तारं किमन्वेषयामि ? स्वकण्ठस्थितं यत्तच्छब्दानुसारिणं श्लोकमेवाऽत्र श्रावयामि—

यत्र येन यदा यद् यद् यादृग् यावच्च दीयते।
तत्र तेन तदा तत् तत् तादृक् तावच्च लभ्यते॥ [इति पठति]

उपा—अरे मूढ ! गहनगभीरस्थानवर्त्तिनः श्लोकपाठकस्यायं शब्दो दूरात् श्रूयते, तत् त्वं तस्य शब्दमनुसरन् तं जनमनन्वेषय।

सोम—आं ज्ञातम्। दूरं मंडोवरं गत्वा तत्र गहनगभीरे कूपे झम्पां दत्त्वा तत्र मण्डूकमण्डले कच्छपकुलीरकुले वा श्लोकपाठकमन्वेषयिष्यामि। परं तस्य मम च कूपादुद्धरणार्थं सुदृढदीर्घरज्जुं पञ्चषान् प्रबलान् पुरुषांश्च सहैव प्रेषयतु। शीघ्रतरं एतत् कार्यमिच्छति चेद्, वयं सर्वेऽपि मोटरवाहनेन याम इति रोचते मे।

उपा—अज्ञ! रोचते ते कूपपतनम्। धिक् त्वाम्। अरे! दूरवर्ती अयं शब्दः प्रतीयते। तत् किंचिद्दूरं गत्वा मार्गयैनम्। बुद्ध्या विचारणीयं नाम। कीदृशः शब्दः कियद्दूरतः कर्णपथमागतः स्यादिति।

सोम—आम्, निपुणोऽस्मि नितान्तम्। ज्ञातं मया। योधपुरीयस्तोपशब्दः श्रूयते पालीनाम्नि शाखापुरे। तदहं प्रातःकालिकेन वाष्पयानेन पालीं प्रस्थास्ये। सम्भ्रमकं भवान् किं पश्यति? त्वरा चेद् वायुयानमानाययतु भवान्। इति मे रोचते।

उपा—रे जड़ ! रोचते ते नगराद बहिष्कारः । नहि ध्वन्यात्मकोऽयं तत्कृते पालीगमनेन कोऽर्थः ?
शब्दः, किन्तु वर्णात्मकः । तत्कृते पालीगमनेन कोऽर्थः ? एनं बहिष्कुरु वत्स
धिक् त्वाम् । [ रविदत्तं प्रति ] एनं बहिष्कुरु वत्स
रविदत्त !। त्वं गत्वा वस्तुतत्वं जानीहि । अस्माभिः
पुनर्नीर क्षीरसारग्रहणं कर्तव्यम् । शीघ्रमागच्छ । जातायां
निश्चिन्ततायामग्रे प्रमोदकथामास्वादयिष्यामः । संवादं

[ प्रतिवध्य ]

सोम—कार्यप्रेषणे वराकः सोमदत्तः । क्षीरमोदकास्वाद नावसरे
तु गुरुणा सह रविदत्त उपतिष्ठत । न गमिष्यामि बहिः ।
क्षीरमोदकान् भुक्त्वा गमिष्यामि ।
[ इति भूमौ सुतरां निषीदति ]

उपाध्या—रविदत्त ! अस्य गले अर्धचन्द्रकलां क्षिपत्वा निष्का-
सयैनम् ।

सोम—चन्द्रकला सुमधुरा नाथद्वारीये मन्दिरे भुक्ता, सा किम-
र्धा दीयते गुरो !, पूर्णप्रदानेनानुगृहाण ।

रवि—[ गुरोरिङ्गितं ज्ञात्वा ] अरे पठितमूर्ख ! एषाऽर्धा चन्द्र
कला, तां ते गले क्षिप्त्वा एष त्वां बहिष्करोमि, करोमि
च गुरोरादेशम् [ इति तथा कुर्वन् गच्छति ]॥

उपा—[ स्वगतम् ] यदि संस्कृता वाग् मृता स्यात्तर्हि हताः
स्मो हन्त ? दैवहतकेन। नष्टाऽस्मादृशो संस्कृतोप-

जीविनां जीविका । यदि रविदत्तस्तथोच्चारयन्तं तं जनमत्रानेष्यति, तर्हि अपि अहं तत्प्रतीकारं किं करिष्यामि ! कथं नष्टा स्यान्मे चिन्ता ! आं ज्ञातम् । अहरहरुपास्यमानं ब्रह्माणमत्रा ह्वयामि । स मे चिन्तां हरिष्यति, करिष्यति च तत्प्रतीकारम् । तत समाधिमनु प्रविशामि । [ इति समाधिं तन्मोक्षणं च नाटयति ]

अहो ! एष स्मृतमात्र एवोपस्थितो भक्तमनोरथविधाता धाता । तदर्घ्यादिकं सज्जयामि [ तथा कृत्वा पठति ] जयति वेदविधानविकासनः कमलकान्तमुखः कमलासनः। दिशति वाक् किल यस्य चतुष्फलं सुचतुरा चतुरानन-निर्गता ॥

[ इति पठित्वा नत्वा च अर्घ्यं पाद्यमासनं चार्पयति ]

ब्रह्मा—सौम्य ! सिध्यतु समीहितं भवतः । कथं यं, कुतोऽहं स्मरणपथमानीतः। कस्ते मानसस्तापः। त्वरितं निवेदय। एषोऽपहरामि ।

उपा—भगवन् ! गैर्वाणी वाणी निष्प्राणीति मुहुर्मुहुः श्रूयते। अतो दूयमानमानसेन मया भगवाननुस्मृतः। देव ? दार्यतां दीनानां दुःखम् । अनुगृहाणालम्बदानेन अस्मान् ! पितामह ! पाहि पाहि निजादेशपालकान् बालकान्।

ब्रह्मा—वत्स । कोऽयममाङ्गलिक-प्रलपति संस्कृता वाग् मृतेति । ननु वेदमुख ! भूदेव ! देवभारती देवलोकमलंकृतवती त्यपि मुखादुच्चार्यमाणं वाक्यं न शोभते वेदमुखानां भवादृशाम् । श्रूयताम्

यस्या ओमिति रक्षकास्त्रिजगतां प्राणाश्च, वेदा मुखं,
गायत्री हृदयं, गलोऽमलगिरां हेतुश्च शाब्दं श्रुतम् ।
ज्योतिर्वैद्यकशास्त्रकं भुजयुगं, काव्यं ह्युरोजद्वयं,
वाग्जालं त्ववरं परा अवयवा, नश्येन्न सा दिव्यवाक् ॥

उपा—भगवन् ! एतेन वचनामृतेन आप्यायितं मदीयं हृदयम् । पुनर्देवोज्जीवितोऽस्मि मातुः कुशलसारेण समाचारेण ।

ब्रह्मा—अधुना त्वदीया पद्यश्रवणजाताऽपि शंका अचिरादेव उपशमिष्यति । [ नेपथ्ये-जयतु जयतु पाध्यायः ]

उपा—[ कर्णं दत्त्वा ] अये ! एष रविदत्तस्य स्वरो श्रूयते सोऽपि कृतकृत्यः समागतो भवेद् भगवत्-कृपया । [ ततः प्रविशति शिवशर्मपुरःसरो रविदत्तः ]

रवि-जयतु जयतूपाध्यायः । चानोदगुरो राजराजेश्वरमान्यस्य पं० श्रीउदयचन्द्र-भट्टारक-महोदयस्य चिकित्सकचूडामणेर्भव्यं भवनं भूषितवता प्रस्तूयमानायुर्वेदमर्मणाऽनेन शिवशर्मणा समुच्चार्यमाण आसीत् स श्लोकः ।

उपा—[ शिव शर्माणं प्रति ] स्वागतं महाभाग ! नमो वः । कृपया पुनः पठतु तदेव पद्यम् ।

शिव— [ प्रणामोच्चरं पुनः पठति " संस्कृता वागर्हिताऽसौ" ।

उपा—[ सभ्रूभङ्गम् ] किं 'संस्कृता वाक् काममृता।' इत्यमङ्गलमुच्चारयसि । तत् नैवेदानीं भगवति विराजमाने संमुखे चतुर्मुखे सहिष्येऽमुं वचनवज्रपातम् ।

शिव—[ स्वगतम् ] अहो ! अस्य तपोनिधेर्ब्राह्मणदेवस्य तपःप्रभावेण प्रबलम् । तदहमेनं वचनामृतरसेन कोपानलतप्तं द्रुततरं शीतलीकरोमि ।

ब्रह्मा—करोतु सविधानं समाधानं भूदेवस्य शिवशर्मा । तावदहं गत्वा स्वस्थायां भारतभारतीभाषाद्वितीयायाः संस्कृतभाषाया मूर्तिमत्या अत्रानीय प्रत्यक्षीकरणे प्रबन्धमारचयामि । यतो महाभागेन सांवत्सरिकं व्रतानुष्ठानमनुष्ठाय आराधितोऽस्मि । विष्णु शर्मन् ! एष गच्छामि ।

उपा—एवमस्तु । अतीवानुगृहीतोऽस्मि । [ इति प्रस्थितं विरिञ्चिं संमानयति ]

शिव—अहो ! महान् तपोनिधेस्तपःप्रकर्षः । येन देवा अपि प्रत्यक्षीभवन्ति ।

उपा—आस्तां तावत् । किं किं न क्रियते कुक्षिम्भरिणा ? प्रकृतमनुसरतु भवान् । किं समाधानं अभाङ्गलिकस्य परोच्चारणस्य ?

शिव—क्षम एव विचक्षण ! वैद्योऽहम् । अस्मिन् युगे अनाघ्राततमौलिकग्रन्थगन्धा अन्धा इव अदृष्टपथाः श्रुत-

मात्रकथा यथा-तथा कुत्सितां चिकित्सां कर्तुं प्रगल्भन्ते वैद्यंमन्याः। तैश्च निर्निदानं निर्विधानमुपचर्यमाणो वराको रोगी भयङ्करदशामापद्योऽकाण्ड एव कालकवलीकृतः स्यात्! तद्विषयकभाषणावसरे साधारणप्रारम्भिक ज्वराग्नि मान्द्य-विड्बन्धादिनिवारणोचितः श्लोकोऽयं प्रासङ्गिक उद्घोषितः। तथाहि-[ संस्कृता वागर्हिता' इत्यादि पठति. पदच्छेदं च करोति ]. इदानीं संक्षिप्तेनाऽपि व्याख्यानेन ज्ञास्यति विज्ञो रहस्यम।

तथाहि—संस्कृता कृतसंस्कारा वा अगर्हिता अकृतसंस्काराऽपि कीटकभक्षणादिना अगर्हिता अदूषिता। नागरीति समाहिता-अस्यार्थः। नागरं शुण्ठी तेन संस्कृता। इति इत्थं समाहिता कृतसमाधाना। अमृता गुडूची, पिप्पली, हरीतकी वा लोके कां वाञ्छितां सिद्धिं न दत्ते? अथ च 'नागरीति-समाहिता' इत्यस्य व्याख्यान्तरमपि सम्भवति। नागं सीसकं वङ्गं वा, रीतिः पित्तलं ताम्रस्थानापन्नं कादाचित्कम्, ताभ्यां समाहिता। अन्यत्तदेव।

उपा—मया तु संस्कृतसाहित्यज्ञेन संस्कृतविषये एष भावो ज्ञातः-तथाहि संस्कृता वाक् अर्हिता इति विच्छिद्य, अर्हिता पूजिता असौ संस्कृता वाक् संस्कृतभाषा. नागरीति लिपि-सामान्येन देवनागरीति कृतसमाधाना। कामं प्रकामं मृता सती लोके वञ्छितां सिद्धिं न दत्ते। इति।

शिव—ननु साहित्यसारज्ञ! मया संस्कृतज्ञेन भगवत्याः सुरभारत्या विषये एतदमङ्गलं कथं प्रलपितुं युज्यते। तद्विषयकमपि

सुशोभनं व्याख्यानं श्रूयताम् नागरीशब्दो लिप्यां भाषायामपि व्यवह्रियते । तेन नागरी अर्थात् राष्ट्रभाषा हिन्दीत्वेन समाहिता समैः सर्वैः जनैः आहिता गृहीता । संस्कृत-साहित्यतः सर्वथा पुष्टि-प्राप्तौ उचितमेवैतत् । अत एव अमृता न मृत्युग्रासं प्राप्ता संस्कृता वाक् कां वाञ्छितां सिद्धिं न दत्ते ? अपितु सर्वामित्यर्थः ।

इति मङ्गलस्थाने को नाम क्लेशलेशः ?

उषा–धन्योऽसि धीधुरंधर ! भवादृशैरेव संस्कृतोन्नतिविषये पूर्णा प्रत्याशा । ईदृशान्येव प्रसूयतां भगवती भारती रत्नगर्भा रत्नानीति नित्यमाशासे ।

शिवशर्मा-संस्कृतस्य सेवां विना भारतीयानां भव्या गतिरेव नास्ति । तदीयज्ञानवञ्चिताः पङ्गव इव पुरुषपुंगवा अपि राष्ट्रभाषापथे चलन्त पदे पदे स्खलन्ति । अनुतप्यन्ते च अभ्यन्तरमेव भ्रान्ता इव ते ! अत एव तेषां मुखात् थकितादि-शब्दकणकाश्चणका इव उच्छलन्ति । ये जना अवसरेषु तांश्चर्वन्ति, तेऽपि अचिरादेव तृषिता भवन्ति; अपेक्षन्ते च संस्कृतममृतम् ।

उषा--धन्यधन्योऽसि वैद्यधुरन्धर ! किन्तु हिन्दुस्तानीतिनाम कल्पननीतिं मनुसरन्तः केऽपि मनुजा महिषा इव निज पदन्यासप्रक्षिप्तैः उर्दूशब्दकर्दमैः कलुषयन्ति हिन्दीसाहित्य-सरोवरं संस्कृतसरिता संवर्धितम् । तत्र कः प्रतीकारः ?

शिव—कलुषयन्तु नाम ते। तेषामेतत् स्वाभाविकम्। किन्तु भारतीयायां गणनायां तदपेक्षया अधिकाधिकास्ति संस्कृतसंरक्षिताया राष्ट्रभाषाया हिन्द्या अनुरागिणां जनानां संख्या। ते स्वभावत एव साहित्यिकेषु काव्य-कलापेषु आलापेषु च निःशङ्कं व्यवहरन्ति मुक्ततः प्रकृतिनिर्गमितान् शब्दान्। रीतिग्रन्थविषये तु सर्वैरेव आश्रयणीया भवति रमणीया संस्कृतभाषा। तत् कथं मृता स्यात् संस्कृता भारती।

उपा—प्रियदर्शन! शुभदर्शनो भवान्। अनुस्मारिता अद्य भवता सुश्रुतचरकवाग्भटादय उद्भटाः संसेवितसंस्कृताहंकाराः भारतभुवोऽलंकारा अगदंकाराः। प्राचीनानां कविवैद्यानां नवीनानां लोलिम्बराजम-म गणनाथसेन—जयपुरीय कवि श्रीकृष्णरामदीनां कविता एवोज्जीवयान्ति म्रियमाणं मदीयं मानसम् किं पुनरोषधयः? अत एव वङ्गीया वैद्याः कविराजत्वेन ख्याताः स्युः।

रवि—अहो! उपस्थितो भगवान् पितामहो द्वाभ्यां पुण्यदर्शनाभ्यां सह।

उपा—[अर्घ्यादिकं सज्जयति] प्रयुक्तं पद्यं च पठति 'जयति' इत्यादि]

[अर्घ्यादि क्रमशः समर्प्य सर्वे प्रणमन्ति] भगवन्! अतीवाऽनुगृहीताः स्मो मातुरुपमातुश्च प्रत्यक्षसंदर्शनेन। प्रियसख शिवशर्मन्! उपश्लोकयावो भगवत्यौ क्रमशः।

ब्रह्मा—दीर्घायुष्यमनुभवत सौम्याः । प्रस्तुतं च त्वरयैव समापयत । भारतभारतीविषये दीनानां भारतीयानां प्रभवन्ती प्रार्थना विचारणीयाऽस्तीति शीघ्रमेव प्रतिनिवृत्ता भवेम इति ।

उपाध्या-भगवन् ! एष तथा करोमि । [ क्रमेण पठत ]

जयति जयति वेदारण्यपूरिण्यमेदा
कविहृदयतरङ्गासङ्गिनी दिव्यगङ्गा ।
जयति जयति माता कोविदानां वदाता
मधुररसविलासावासभूर्दिव्यभाषा ॥

अपिच—

मातुः सुरसरस्वत्या अरविन्दीकृतां सुताम् ।
मिलिन्दीभूय वन्देऽहं हिन्दीमिन्दीवरेक्षणाम् ॥

[ ततश्छत्रा द्वारा नीराजयतः ]

जय जय सुर भाषे, ननु जय जय सुरभाषे
सुरसदनादवतीर्य सुराजसि भारतसुखवासे
ज्ञानसुधारसवर्षमनुग्रहमाप्य ससुखमासे ।
ज्ञानसमेवमनुक्षणमिच्छति, भवतीं समुपासे

त्वमपि सुतं सुनिरीक्ष्य सुतुष्यसि संगतमुल्लासे ।
त्वं यदि नेषि नयनपथमेष तु पश्यति हाऽऽकाशे ।
तव सुकृपा-सुलता फलिताऽभूदादिकवौ व्यासे ।
सुविकासेन बभासे भासेऽपिच कालीदासे ।
सैव कथं फलिता भवतान्नहि नित्ये पद-दासे ॥ जय जय० ॥

---

जय भारतभाषे ! जय राष्ट्रियभाषे ! जय हिन्दीभाषे !
तू है जनित, सुपालित, लालित संस्कृत सरिता से ।
नलिनी ज्यों फलिनी, हो प्रमुदित अलिनी जनता से ।
सुरभाषा तो भूख भगाती, यदि हम हों प्यासे ।
तो तू हरती प्यास सुधा ला उस सुर गङ्गा से ।
तुलसी, सूर, केशवादिक कवि तेरी सुकृपा से ।
होकर सफल सूर्य सम, शशि-सम जगमें परकासे ।
जिनकी अजर अमर गुणगाथा गाते गुरुता से ।
पूत करो अब नित्य पूतको शुभ दृग-धारा से ॥ जय० ॥

उभे-सौम्याः ! सुखजीविनो भवत ।

ब्रह्मा-अहो ! रमणीयता संस्कृतभाषाश्रितस्य संगीतस्य ।

अतएवाऽधुनापि गीयते कीर्तिर्जयदेवादिकवीनाम् ।
भगवत्यौ युवामपि स्वकर्तव्यं कर्माचरतम् ।

भारतभा-भगवन् पितामह ! भवति सर्वज्ञे विश्वविश्रुते विराजमाने के आवाम् ?

देव ! न जाने कर्म वा सारवस्तु शुभ-कर्म ।
सर्वज्ञाता जानते धर्माधर्म-सुमर्म ॥

ब्रह्मा-दिष्ट्या भगवती भारतभात्यपि मातुः कृतज्ञतां दर्शयन्ति संस्कृत हिन्दी भाषयोः समानरूपं दोहाच्छन्दः प्रयुक्तवती । धन्याऽसि वत्से ! । संस्कृत-भगवन् ! भवदग्रे आवां किं कथयाव ? अस्मादृग्भिरपि, भवत्प्रसादोऽपेक्ष्यते नितराम्, तद् भवानेव प्रमाणं शुभ-प्रवचने ।

तथापि अनति क्रमणीयं भवदादेशं पालयावः । [ इति मिथः समुखीभूय पठतः ]

सं०—ज्ञानं खलतु मानसे सुमनसां हंसो यथा मानसे,
भा०--सारे साधन ज्ञानसे उदित हो सद्-रत्न ज्यों खान से ।
सं०—संमानं च सतां सभासु सुतरां संयान्तु सांगीतिकाः,
भा०--माता संस्कृत से सदा सरस हो संगीत भी रीति का ॥

सं० -संगीतं नर-भाषयाऽस्तु, जनता रज्येद् भृशं भारती,
भा० माता तो कहती यथार्थ, पर मैं उर्दू मिले हारती।
सं०—संसार व्यवहार-भौतिक विधौ युक्ताऽस्तु वाग् भारती,
भा०--जो हो संस्कृत-दैविकाऽऽत्मिक कथा, तो मैं करूं आरती॥

उपा—हृदयविकासनार्थं मुखवासनार्थं च तावत्ताम्बूल मानये।
उभे—नापेक्ष्यते तत्। शृणु ? शृणु—
सं०—गायत्र्या हृदयं मुखं विमलयन् भूयाद् द्विजन्मा सुखी,
भा०—चाहे हो जपमालिका, न अथवा, चाहे न हो गोमुखी।
सं—शक्यं तद् यदि नो रजेत् तदुभय श्रीराम-नामाऽप्यहो॥
भा—दोनों को बस, राम-नाम रंगता, ताम्बूल हो वा न हो॥
उपा—अस्तु, मातः भारतभारति! अस्मद्रक्षार्थमपि किंचिन्नि-
वेदय संस्कृतमातरम्।
भा—अस्तु।

मा । कर भक्त-बाल जन की, तू एक माता-पिता।
सं—धर्मो रक्षति रक्षितः किल यथा, रक्षाम्यहं रक्षिता।
भा—मासे बालक बाल-बाल बचते, मा को न हो आपदा।
सं—श्रद्धा बालजनस्य या गुरुजने, सैवाऽस्ति रक्षा सदा॥
भा--एतद् भगवत्या आदेशहृदयं पुनरहं स्फुटीकरोमि, श्रूयताम्

क्या शिष्ट-व्यवहार है, समझिए, कैसा सदाचार है
स्वामी-सेव्यनुसार है जग-कथा जो धर्मका द्वार है।
श्रद्धा-रक्षण-भार है स्वजन पै जो भक्ति-उद्गार है,
पूरा रक्षण-भार है स्वपति पै, सारा यही सार है।

उपा—अस्मदीय श्रद्धा-रक्षिता भगवती अवश्यं धर्मावस्था इव अस्मान् रक्षिष्यतीति निष्कर्षो जातः । अतीवाऽनुगृहीताःस्म ।

सोम—[ अवसरे प्रविश्य हिन्दी प्रति ] अपराधक्षमाप्रार्थनापूर्वकं प्रार्थये-

कोईयों कहते कि हिन्दि ! तुमको है मागधीने जना ।
हां जो हैं अपशब्द-गर्दभ उन्हें है मा-गधी ने जना ।
रानीके यन बैठतीं प्रसवकी बेला कई दाइयां ।
गङ्गा से नहरें बने तक कई होती न क्या खाइयां ॥

उपाध्याया-प्राक् सर्वानहं धन्यवाद पात्रीकरवाणि

धन्यो ब्रह्मा प्रथम मुदिता यन्मुखाद्दिव्यभाषा ।
धन्यैषायाऽजनयदमलां भारतीं राष्ट्रभाषाम् ॥
धन्यैषाऽपि ह्यनुचरतिया मातरं तत्कृतज्ञा ।
तद् धन्याः स्मो वयमपि तु तद्दर्शनानन्द भाजः ॥

ब्रह्मा—अस्तु । विष्णुशर्मन् ! सिद्धं भवत्समीहितम् । किमधुनाऽवशिष्टम् !

तथापि भरत वाक्येन प्रवच्मि शुभम् ।
राजानः सुखिनः सन्तु बसन्तु ससुखं प्रजाः ।
नित्यानन्दः सुमनसां मनःसु परिवर्धताम् ॥

॥ निर्गताः सर्वे ॥

—शम्—